एस्.जगन्नाथः। मैसूरु
jagannathas1956@gmail.com



५
४.३.२०२०
पञ्चपुटानि

दशस्वपि दिक्षु कटाक्षं पातयन्ती संस्कृतपत्रिका।




*Syaanskreet language is good. Not only good, but also super.Not only super, but also divine. Not only divine but also extraordinary. Not only..........*

## जगन्नाथीयम्।

**'स्वीयोऽध्वा परमोत्तमस्तदितरः श्रेष्ठोऽपि न श्रीयताम्'**
**इत्येवं मनसा विवेकविरहाद् गर्वं सदा कुर्वताम्।**
**उत्कृष्टेष्वपरश्रिताध्वसु तिरस्कारं परं पश्यतां**
**पादस्य स्खलनात् तृहन्नवयवान् पातः स्फुटं ज्ञायते॥**
(तृहन्-तृह+शतृ। तृह हिंसायाम्। रुधादिः)



## इङ्ग्लीष् विश्वभाषा कथमभवत् ?-२

(पूर्वसंञ्चिकातः अनुवृत्तः प्रबन्धः)

'अहं जर्मन्भाषां जानामि फ्रेञ्च्भाषां जानामि जापानीस्भाषां जानामि' इत्येवं कत्थमनाः केचन मया दृष्टाः। भूयस्सु प्रसंगेषु, तत्तद्भाषाः स्वीयभाषात्वेन प्रयुञ्जानेषु तत्तद्राष्ट्रेषु, एतेषां तत्तद्भाषाज्ञानं शाकापणव्यवहारादिमात्रविश्रान्तम्। कदाचित् पश्चिमस्यां दिश्युदयमानमिव सूर्यं -तत्तद्भाषागतानां कथानां भारतीयासु भाषासु कृतमनुवादग्रन्थं- वयं पश्यामः।

एवमभ्यूहितुं शक्यते किम् ?--

''कश्चन भारतीयो जनः फ्रेञ्च्भाषां शिक्षते। ज्ञातफ्रेञ्च्भाषाकः सन् स जनो फ्रेञ्च्भाषामातृका अभ्यस्यति। अप्रकाशितपूर्वं मातृकास्थं कञ्चन फ्रेञ्च्ग्रन्थमादत्ते संशोधनार्थम्। तेन चतस्रो मातृका आसाद्यन्ते। स ताश्चतस्रोऽपि मातृकाः सम्यक् परिशील्य मातृकाणां वंशं निर्धार्य पुटानामधः लिपिकरप्रमादान् प्रणुद्य पाठान्तराणां राशिं सम्यगालोड्य ग्रन्थकर्त्रा रचितं पाठं चिनोति। संस्कृतभाषया पीठिकां रचयति यत्र च ग्रन्थविमर्शं करोति। परिशिष्टान्यपि योजयति यत्र संपादकीयं वक्तव्यं संस्कृतभाषया सृजति।''

अहं तु न शक्नोम्येवमभ्यूहितुम्।

पाठकेषु कोऽपीत्थंभूतलक्षणं स्वप्नं स्रष्टुं प्रभवति, कृपया सूच्यताम्, अहमपि प्रयते।

केचन भारतीयाः भारतमूलानां सभाषाविषयाणां संशोधनं तथा कुर्वन्ति यथाऽस्माकं हृदयमाश्चर्यगिरेरधित्यकां स्पृशति। अत्र ममायमेव प्रश्नः-तेषां संशोधनं कया भाषया प्रकाशनं प्राप्नोति ? किं संस्कृतभाषया ?

कोऽपि संशोधक इङ्ग्लीष्भाषया विरचित-विरच्यमाण-विरचिष्यमाणग्रन्थ आगच्छति भारतम्। संस्कृतस्य न केवलं काव्यग्रन्थान् परन्तु शास्त्रग्रन्थानप्यनूदितुं तद्विषयकं संशोधनप्रबन्धं च रचयितुं चेष्टते। संशोधनग्रन्थेषु परिशिष्टादिकमन्ते स्थापयति। संशोधकानुकूलान् विषयान् परिश्रम्य पीठिकायां योजयति। मूलग्रन्थस्य पाठं दत्त्वा इङ्ग्लीष्इत्यादिकासु भाषासु अनुवदति।

कोऽपि गैर्वाण्या वाण्या भक्तोत्तमो जन एवं करोति वा ? इङ्ग्लीष्भाषया रचितस्य मूलग्रन्थस्य पाठ्यं दत्त्वा संस्कृतानुवादं कृत्वा टिप्पणीरपि स्थापयति वा ?

इङ्ग्लीष्भाषाकार्यक्रमेषु सत्सु, तदाह्वानपत्रिकाम् इङ्ग्लीष्भिन्नया भाषया मुद्रितां नाहं व्यलोकयमेतावन्तं कालम्। परन्तु संस्कृतसंबद्धेषु सत्सु कार्यक्रमेषु, आह्वनपत्रिकासु संस्कृतं कदाचित् स्वमुखं दर्शयत इति कथञ्चित् समाधातव्यम्।

मम परिचिता काचिद्भद्रमहिला कदाचित् फ्रान्स्राष्ट्रम् अगच्छत् तत्रैव च त्रीणि वर्षाणि संस्कृतशिक्षिकाऽऽसीत्। शाकापणादिव्यवहारयोग्यानि त्रिचतुराणि फ्रेञ्च्भाषावाक्यान्य शिक्षत। फ्रेञ्च्-संस्कृतकोषस्य, संस्कृतभाषया फ्रेञ्च् व्याकरणस्य रचनाया वा,मातृकासूपलब्धानामप्रकाशितानां फ्रेञ्च्ग्रन्थानामनु संधानस्य वा कथा तु दूरे ; फ्रेञ्च्भाषामेव सम्यङ् नाशिक्षत। कदाचिच्च तत्रत्यैर्जनैर्निन्दिता च। एतत् स्वयं सा प्रोक्तवती। परन्तु चापल्यात् ''अहं फ्रेञ्च्भाषां जानामि'' इति सगर्वमुक्त्वा केवलम् एकं वाक्यं पौनःपुन्येन वदति स्म-''ह्यः वर्षाऽभवत् इत्यस्मिन्नर्थे इङ्ग्लीष् भाषायां there was rain yesterday इत्युच्यते। फ्रेञ्च्भाषायां पुनः ........ इत्युच्यते''-इति। अहं न जानामि फ्रेञ्च्भाषाम्। तस्मात् तया फ्रेञ्च्भाषायां किमुक्तमिति सम्यक् स्मर्तुं न प्रभवामि। तयोक्तं फ्रेञ्च्भाषावाक्यं शुद्धं वाऽबद्धं वा नाहं जाने। एतावद्वाक्यमात्रविश्रान्तं तस्याः फ्रेञ्च्भाषाज्ञानम्। परन्तु सा गर्वेण मण्डलीकृतकपोला प्रायशः एकस्मिन् मासे न्यूनतममेकवारम् ''अहं जानामि फ्रेञ्च्भाषाम्, अहं जानामि फ्रेञ्च्भाषाम् '' इत्याम्रेडयति स्म।

इतश्च ''वर्ल्ड् स्याँन्स्क्रीट् कान्फेरेन्स्'' इतिनामधेयं महानाटकं चतुर्षु वर्षेष्वथवा त्रिषु वर्षेष्वेकवारं यदभिनीयते तत्र तु संस्कृतस्य नाप्यर्धचन्द्रप्रयोगः, नापि तदर्हं स्थानम्। केचन संस्कृतभाषयैव रचितप्रबन्धाः स्वीयान् प्रबन्धांस्तत्र पठन्तीत्येव विस्मयाय मे। सर्वत्र तत्र इङ्ग्लीष्, इङ्ग्लीष्, इङ्ग्लीष्। तन्नाटक-सम्बद्धा 'आह्वानपत्रिका' न मुद्राप्यते,'इन्विटेषन्' तु प्रकाश्यते!

अपि चात्र संस्कृतेतरासां भारतीयानामितरासामपि भाषाणां विषये परम एवानादरः। समग्रान् वेदान् सुधाकरचतुर्वेदी यदन्ववदत् कन्नडेन तस्य प्रस्तावः कदाऽपि अस्यां ''कान्फेरेन्स्'' सभायां कृतो न श्रुतचरः। ऋग्वेदस्य ससायणभाष्यस्य कन्नडा नुवादो यत् हासनवेङ्कटराव्-केन कृतो बहूनां पण्डितानां साहाय्येन तस्य नाम्न उच्चारणमपि न कृतमेतावन्तं कालं सभायामेतस्याम्। के.एस्.वरदाचार्यप्रणीत-तत्त्वमुक्ताकलापव्याख्याप्रभृतिषु नवीनेषु संस्कृतशास्त्रकृतिषु कटाक्षोऽपि न निक्षिप्यते तत्र केनापि। परन्तु ''मनुस्मृतौ सामाजिकी व्यवस्था'' इत्यादिषु चर्वितचर्वणायितेषु निष्प्रयोजनेषु कालापहरणमात्रार्थेषु विषयेषु ''चर्चागोष्ठ्यो(?)'' व्यवस्थाप्यन्ते याश्च इङ्ग्लीष्भाषया प्रचलन्ति। तत्र वादा विवादाः कलहा गर्जनानि च संभवन्ति। परन्तु यत् तत्र संस्कृतभाषाया अपमानना जायते तदधिकृत्य एकं पदमपि केनापि नोच्चार्यते, यद् विरुध्य प्रतिभटना तु दूरे।

पुनश्चावतितीर्षामि''इङ्ग्लीष् विश्वभाषा कथमभवत्'' इति विषयभूमिम्।

केनचन संशोधकेन मिलामो यस्य स्वीया भाषा इङ्ग्लीष्। स गच्छति जपान्राष्ट्रम्। तत्रत्यं कञ्चन देवालयमधि कृत्य इङ्ग्लीष्ग्रन्थं तथा बृहदाकारकं रचयति यथा तत्स्वरूपवान् ग्रन्थो जपानीस्भाषयाऽपि न विरचितपूर्वः। ''अस्मद्राष्ट्रीयं देवालयमधिकृत्य इङ्ग्लीष्भाषया कश्चन ग्रन्थो विरचित'' इति ज्ञात्वा जपान्राष्ट्रप्रजाः सन्तुष्यन्ति, इङ्ग्लीष्भाषाम् आदरेण पश्यन्ति। ते च स्वशिशून् इङ्ग्लीष्भाषां शिक्षयितुं वाञ्छन्ति। क्रमशः स्वयम् इङ्ग्लीष्भाषया ग्रन्थान् जिग्रथिषन्ति।

भारतेऽप्येवमेव। इङ्ग्लीष्भाषयैव प्रत्यहं व्यवहर्तारो ग्रन्थान् रचयितारश्च कथमुदभूवन् अस्माकं राष्ट्रे ? यस्मिन्नपि कस्मिन्नपि विषये ग्रन्थस्य रचना-प्राचीनान् शब्दान् अवशेषयति, नूतनान् शब्दांश्च निर्माति। न हि संस्कृतस्य सर्वेऽपि शब्दाः सदा लौकिकव्यवहारयोग्याः। इङ्ग्लीष्भाषायामप्येवमेव। परन्तु तत्तद्विषयेषु ग्रन्थेषु तत्तद्विशिष्टाः शब्दाः प्रयुज्यन्ते। इङ्ग्लीष् भाषाया यदधुना विश्वभाषात्वं तदनेनैव पथा प्रावर्तत। यः कोऽपि भवतु विषयः, तं साध्यं मत्वा साधक इङ्ग्लीष्भाषाग्रन्थो विरच्यतामिति तत्र महामन्त्रः।

फिसिक्स्, केमिस्ट्री, बाटनी-इत्यादिषु विषयेषु तज्ज्ञा यदा मिलन्ति तेषां नैसर्गिक एवेङ्ग्लीष्भाषाप्रयोगः। ते च स्वाधीते क्षेत्रे किं कृतं किमस्ति क्रियमाणं किं च कर्तव्यम् इत्यादि चर्चन्ति; ये कदाऽपि ''जयतु जयतु इङ्ग्लीष्भाषा'' इति नाक्रोशन्ति।

**कन्नडे-**

''तस्मिन् विषये यद् वाङ्मयं सृष्टं न तत् पर्याप्तम्। अस्मिन् विषये यद् वाङ्मयं सृष्टं न तत् पर्याप्तम्। कन्नडे विज्ञान ग्रन्थाः विरलाः। यदि इङ्ग्लीष् भाषायामिव कन्नडेऽपि विज्ञान ग्रन्था विपुला अभविष्यन् कन्नडभाषां साधनत्वेन गृहीत्वा पठितारो विद्यार्थिनोऽपि, इङ्ग्लीष्भाषां साधनत्वेन गृहीत्वा पठितार इव विज्ञानिनोऽभविष्यन्। ''

इत्यादिकमुच्यते कन्नडभाषाया आधुनिके साहित्ये।

कन्नडसाहित्यजिल्लासम्मेलनानि प्रतिवर्षमायोज्यन्ते। तत्र ''अस्मिन् वर्षदशके महाकथा इयत्यो रचिताः। भिन्नभाषाणां कृतय इयत्योऽनूदिताः। काव्यानीयन्ति रचितानि। विज्ञान वाङ्मय मियद् रचितम्। अस्मिंश्च क्षेत्रे रचिता ग्रन्था केवलमङ्गुली गणनीयाः। '' इत्यादिकमुच्यते।

**संस्कृते- केवलमेक एव मन्त्रो जप्यते-**

''सर्वमपि संस्कृतेऽस्ति !''

एवं घोषणा ज्ञानोद्भवा तु न भवितुमर्हति। न केवल-मज्ञानोद्भवा, कयाचिन्मात्रया आलस्योद्भवा चैषा। सति च सर्वस्मिन् विषयजाते संस्कृतभाषायां, किमन्यत् स्रष्टव्यम् ?

अन्यैरस्पृष्टेषु नूतनेषु विषयेषु प्रबन्ध-ग्रन्थादिकं संस्कृतेतरासु भाषासु प्रत्यहं रच्यमानं पश्यन्तोऽपि किमर्थं देववाणीभक्तोत्तमाः पौनःपुन्येन-''वेदः, पुराणं, रामायणं, महाभारतम्''- इति जल्पन्तो धन्यंमन्या बुभूषन्ति ?

**किमत्र प्रमाणमिति चेत्-**

**श्रूयतां महेशचन्द्रतर्कचूडामणिरचिता मातृगीता-**

यावदस्ति त्रयी लोके चतुर्मुखमुखोद्भवा।
यावद्वा रामचरितं वाल्मीकिकविचित्रितम्॥
क्षरन्त्यमृतधारा वा यावद् व्यासस्य सूक्तयः।
वाग्देव्या वरपुत्रस्य कालिदासस्य वा गिरः॥
तावदेष् देवभाषा देवी स्थास्यति भूतले।
यावच्च वंशोऽस्त्यार्याणां तावदेषा ध्रुवं ध्रुवा॥

**मया त्विदमुच्यते-**

संस्कृतेन कृते ग्रन्थे संस्कृतेतरया गिरा।
पीठिका संस्कृतश्रैष्ठ्यं किं न घातयति द्रुतम्॥?
पठितुं संस्कृतग्रन्थं ये जानन्ति जनाः सुखम्।
विज्ञातुं शक्नुवन्त्येते न किं संस्कृतपीठिकाम्॥?
प्रशस्तेति प्रमोदेन यां भाषां त्वं प्रशंससि।
तस्यां श्रेष्ठा न लभ्यन्ते शब्दाः किं पीठिकोचिताः॥?
संस्कृतेतरभाषाभिर्यावदाह्वानपत्रिकाः।
मुद्राप्यन्ते ; पीठिकाश्च रच्यन्ते भिन्नभाषया॥
''सर्वेषु विषयेषु स्युः प्रत्यग्रा रचना'' इति।
यावद् धीः संस्कृतज्ञानां प्रशस्ता नैव जायते॥
यावच्च नवसाहित्यं दूरादुत्सार्यते बुधैः।
तावदेषा मनुष्योक्तिः संस्कृतं नैव जीवति॥

**अदृष्टहिमालयानां भस्मराशिरेव पर्वतराजः।**

अचिन्तितेङ्ग्लीष्विश्वभाषात्वसत्यविचाराणां जनानां मनसि- ''संस्कृतभाषया सहस्रवर्षेभ्यः पूर्वं रचितानां त्रिचतुराणां ग्रन्थानां नाम्न उच्चारणमेव संस्कृतस्योद्धारे परमोऽभ्युपायः।'' इत्येवंरीतिकोऽभिप्रायो दृढमूलः।

संस्कृतस्याभिवृद्ध्यर्थं किं करणीयमित्यस्मिन् विषये गम्भीरं कदाचित् सभासु चर्च्यते तद्विषयिकाः समितयः कार्यं कुर्वन्ति। परन्त्वेतासु समितिष्विदमेव नैयून्यं यत् संस्कृतभाषया ग्रन्था रचनीया इति वाक्यमेव न निःसार्यते सभासु चर्चद्भिरथवा समितिषु सदस्यैः। सर्वत्रायमेव मन्त्रो जप्यते विविधैर्वाक्य विन्यासैः-''प्रशासनं संस्कृतोद्धारं कुर्यात्। संस्कृतम् आकाशाद-प्यूर्ध्वदेशं बलात् प्रक्षेप्तुं धनराशिर्व्ययीकर्तव्यः। संस्कृतोद्धारं ये चिकीर्षन्ति तेषां कतिचन योजनाः (प्राजेक्ट्स्) दातव्याः।''

भद्रम्। परन्त्वेतासु योजनास्वधोनिर्दिष्टेषु विषयेषु कटाक्ष स्यापि न पातः :-

१.संस्कृतेतराभिर्भाषाभी रचितानां ग्रन्थानां संस्कृतेऽनु वादः।

२.संस्कृतभाषया कथानां महाकथानां रचनायै प्रोत्साह स्तासां प्रकाशनार्थं व्यवस्था।

३.संस्कृतसंमेलनेषु वेदोपनिषदां नाम्नो जपम् अकृत्वा नवीनस्य संस्कृतवाङ्मयस्य गुणदोषविमर्शः।

४.न केवलं कवीनां सम्मेलनम् अपि तु संस्कृतग्रन्थ काराणां सर्वेषामपि- संस्कृतेतरेषु विषयेषु संस्कृतभाषया भाषणं कर्तुं प्रेरणा। साध्यं-संस्कृतेतरे विषयाः, साधकं-संस्कृतम्।

५.केवलं वाल्मीकिरामायणं, व्यासमहाभारतमथवा कालिदासप्रणीतं रघुवंशं संस्कृतं न जीवयन्ति। संस्कृतं जीवयन्ति वस्तूनीमानि-संस्कृतवाक्यानां (सुबन्तानां तिङन्तानां कृदन्ताना मव्ययानां च) जनतया क्रियमाणाः प्रयोगाः, नवीनाः कृतिसृष्टयः, संस्कृतेतरेषु विषयेषु संस्कृतेन क्रियमाणाश्चर्चाः।

६. ''गैर्वाणीं वाणीं'' मनसोऽपसार्य, मनुष्यभाषां हृदय क्षेत्रे पोषयितुं यावत् पर्यन्तं संस्कृतज्ञाः अथवा संस्कृतज्ञत्वेन आत्मानं मन्यमानाः जनाः न प्रयतन्ते-

तावत्-

''गीर्वाणभाषाया'' वैभवम् इङ्ग्लीष्प्रभृतिभाषास्वट्ट-हासं करोति, वराकी च संस्कृतभाषा कथञ्चित् प्राचीनानां ग्रन्थानामुच्चैः पठनकाले श्वसिति।

यदा कदा अधिसंस्कृतं लेखाः प्रकाश्यन्ते पत्रिकासु विशिष्येङ्ग्लीष्दिनपत्रिकासु। तत्रत्यान् लेखान् रचितवद्भ्योऽहं क्रुध्यामि, ये प्रायः संस्कृतानभिज्ञाः। तेषां यद्वा तद्वा कथनं यत् प्रकाश्यते पत्रिकासु तत् तासां पत्रिकाणां संपादकानपि जनान् अपराद्धानिव करोति। सप्रयोजनकार्यहीनाः केचन जना एतादृशि लेखनानि दृष्ट्वा स्वयमपि उन्मत्ततां दर्शयन्ति। किमप्यबद्धं प्रति वदन्ति। ''संस्कृतस्याधुनिकीं परिस्थितिमधिकृत्य इङ्ग्लीष्दिन पत्रिकासु प्रबन्धं रचयितुं संस्कृतज्ञानं नावश्यकं, यद्वा तद्वा लिखितुं सर्वेषामस्त्यधिकारः'' इति केचन भावयन्ति।

~~~~~~~~~

केभ्यश्चन वर्षेभ्यः पूर्वं प्रौढशालाया इङ्ग्लीष्पाठ्यग्रन्थे केचनाक्षरदोषा वर्तन्त इति विषये इङ्ग्लीष्शिक्षकाः कोलाहल मकुर्वन्। ---परन्तु---कस्याञ्चित् सविवरणसंस्कृतमातृकासूच्यां (डिस्क्रिप्टीव् क्याटोलाग्)''अनिट्कारिका'' इति मुद्रितव्ये ''अनिष्टकारिका'' इति मुद्रितम्। संस्कृतज्ञास्तूष्णीं तदसहन्त!

## ब्रह्मकाव्ये द्वितीयः सर्गः

**एस्.जगन्नाथः**

१.जीयादविद्यानिबिडान्धकारोत्पाटोग्ररश्मिर्गुरुसंप्रदायः।
सन्दर्शितो येन भवाब्धिमज्जन्मानुष्यनौकोपनिषन्निकायः।॥
२.कर्मण्यतां बोधविधां च लब्ध्वा प्रश्नद्वयं पृच्छति शिष्यवर्गः।
ताभ्यां समुत्कृष्टतरं भवेद् वा किं ब्रह्म तद् येन जगत् प्रसूतम् ॥
~~~~~~~~~

३.एवंप्रसंगे सति तस्य संशीत्यम्भोदवात्यागमयुक्तिजालम्।
उक्तिप्रकारं विलसद्विचारं प्राज्ञाः कुरुध्वं बुधचित्तचोरम्॥
४.एकं परं ब्रह्म भवत्यविद्याहेतोः समस्तेषु हिरण्यगर्भः।
भूतेषु चात्मोपनिषत्प्रसिद्धो भूतानि यस्मात् स्फुरदात्मवन्ति॥
५.ब्रह्माखिलान्येव जगन्ति धत्ते यद् ज्ञानिनां शृङ्खलया प्रवृत्ते।
जिज्ञासुतृष्णाशमवारिपद्ये वेदाद्रिजे कर्मविबोधनद्यौ॥
६.एकान्ततस्तत्त्वमकालवश्यं न द्वैतमद्वैतमुतास्ति सत्यम्।
शाखा इति द्वैतमतिः प्रशस्या शाखीति चाद्वैतगिराऽभिनन्द्या॥
७.एकत्वनानात्व इति द्विधर्मौ ब्रह्मण्यपास्ताखिलदूषणे स्तः।
आद्येन सिद्ध्यत्यवबोधमूलो मोक्षो द्वितीयेन च कर्मकाण्डः॥
८.दृष्टान्त एष स्वदते न चेद्वो दृष्टान्तमङ्गीकुरुताम्बुराशेः।
फेना इमे सन्ति सुफेनिलोऽयं लोको द्विधेत्थं व्यवहारकारी॥
९.सत्यत्वमस्त्वद्वयकल्पनायाः स्यादप्यमिथ्या बहुभेदबुद्धिः।
धीरा! न चाद्वैतगिरा मृषोक्ती राराजतां ज्ञेयमिदं च विश्वम्॥
१०.किं न श्रुता पूर्णमदः श्रुतिर्वः सत्यत्वघोषा किल कारणस्य ?
सभ्या! न वा पूर्णमिदंश्रुतिर्वः कार्यस्य पारार्थ्यमुदीरयन्ती ॥
११.मूलाऽभिदा-धर्मयुतो हि मूली पूर्णः सदा शिष्यत एव विज्ञाः।
मूलीभवन् यः प्रलयस्य काले स्वां पूर्णतामुज्झति नेति तत्त्वम्॥
१२.एकं तथाऽनेकमुभेऽपि रूपे ब्रह्मण्यवस्थानमवाप्य पूर्णे।
शश्वत् क्रियावारिनिधिः शुभंयुर्जीयात् तथा मुक्त्युदधिश्चिरायुः॥
१३.सिद्धान्तशुद्धोपनिषत्पदव्यां पद्येषु निर्णीतिरियं प्रसिद्धा।
एतत्तिरस्कारपराः पटिष्ठाः कर्मप्रमाणत्वनिषेधनिष्ठाः॥
१४.अद्वैतभागो विलसत्प्रमाणः कर्माध्वभागो विजहत्प्रमाणः।
इत्थंप्रकारैर्जडवादवारैर्न प्लाव्यतां वो हृदयान्यसारैः॥
१५.गम्भीरनीरो जलधिः स्थिरः सन् भङ्गाननल्पानचलान् बिभर्ति।
ब्रह्माप्यकम्प्रं भवदेव कम्प्रा अत्यन्तमीषच्च धरत्यवस्थाः॥
१६.नैश्चल्ययुक्तां प्रथमामवस्थां तामक्षरं ब्रह्मविदो वदन्ति।
तस्योत्तरं कम्पनमुग्रसौम्यं सप्त स्तराः स्वस्थितये धरन्ति॥
१७.क्षेत्रज्ञनाम्नीत्यधिकं चलाऽन्तर्यामीति संज्ञेषदिवास्ति कम्प्रा।
मध्येऽनयोः पञ्च परास्त्ववस्था आधिक्यनैयून्ययुताः स्वकम्पे॥
१८.अव्याकृतं दैवमिमे तदूर्ध्वं सूत्रं विराड्जातिरथापि पिण्डम्।
प्राक्प्रागवस्था अधिकप्रकम्प्रा उदीच्युदीच्योऽल्पचला ह्यवस्थाः॥
१९.पिण्डे स्वतां पश्यति यः स मृत्वा पिण्डात्मभावं समुपैति मर्त्यः।
एवं विराडादिकृतात्मभावं तत्तत्स्तरैर्याति न पारमात्म्यम्॥
२०.सृष्टप्रपञ्चस्य परात्मनो यच्छ्रुत्या प्रवेशोऽन्तरवर्णि तत्र।
विज्ञानमय्या भुवनं विकृत्या प्रवेशनं ब्रह्म किलोपयाति॥
२१.संप्राप्य विज्ञानमयत्वमेतन्नैर्गुण्ययुक्तं परमार्थवस्तु।
स्वरूपतो निर्मलमप्यशुद्धिं गच्छन्ननेकांश्च गुणान् दधाति॥
२२.उद्घातवानित्यभिधीयतेऽज्ञैर्यद्येष वेदान्तिवरिष्ठमार्गः।
तन्मस्तकान्तर्गत-सन्तमोघ्नं दीपं बुधा! दीपयतेत्थमाशु॥
२३.ब्रह्म त्रिरूपं-१. परवस्तु २.मूर्तामूर्तं तथा ३.भोक्तृ सकर्मराशि।
पारात्म्यतः कर्मसमूहभागो नैर्गुण्यवान् यो नियतं गुणी सन्॥
२४.तैलादि धत्ते सुमजं सुगन्धं संपर्कि सत्यामपि पुष्पहानौ।
विज्ञानयुक्तात्मवियोगकालेऽप्येतद् गुणाढ्यं परमात्मवस्तु॥
२५.क्षेत्रे यथा सस्यजनिक्षमेऽपि स्यादूषरः सन्ततमेकदेशः।

अंशस्तथा दूषणलेशशून्ये  ब्रह्मण्यविद्यागुणकर्मकीर्णः॥
२६.वेदान्तसाम्राज्यनिविष्टमूर्तामूर्तेतिशब्दार्थरहस्यमेतत्।
वाय्वन्तरिक्षे द्वयमप्यमूर्तं मूर्तानि पृथ्वी च जलं च तेजः॥
२७.ब्रह्मण्यधर्मिण्यरसेऽपि मूर्तामूर्ते रसं च श्रुतिराह यत् तत्।
विज्ञानमादिक्षदमूर्तहेतुं हैरण्यगर्भं रसमप्यमूर्तम्॥
२८. यत् सर्वमेतत् स्फुरतीह विश्वं  तत् सर्वमस्मीति मतेरभावः।
विज्ञायते विज्ञवरैरविद्या  सर्वात्मसंदर्शनमेव विद्या॥
२९. ब्रह्माहमस्मीत्यवबोधकार्यो ब्रह्मात्मभावोऽस्त्ययमेव मोक्षः।
आहोस्विदुत्थापयते मनुष्यान्  सर्वात्मना क्लृप्तिरुपासनैव॥
३०. यद्येष नोपैति विचारमार्गो  यौष्मत्कचित्ताम्बुजभानुमत्त्वम्।
अङ्गीक्रियेतां द्विविधौ हि मोक्षौ  आदीयतां संशयवृक्षपर्शुः॥
३१. ब्रह्मात्मचित्तस्य जनुष्यमुष्मिन्  मुक्ताभिधा ह्यादिमगौणमुक्तिः।
द्वैतीयिकी मुक्तिरथ प्रधाना मृत्वा लयो ब्रह्मणि साधकस्य॥
३२.कर्मानुसारी पितृलोकगामी विद्यायुतो गच्छति देवलोकम्।
एवं श्रुतिः शंसति कर्मविद्याद्वन्द्वाध्वनीनाऽऽप्य-परात्मभावम्॥
३३.नाप्नोति जीवी परमात्मनैक्यं मुक्तो ग्रहाद् बाढमतिग्रहाच्च।
खश्रेणिराप  ग्रहनाम वेदे मात्राः समावापुरतिग्रहाख्याम्॥
३४.इत्थं विराजन्नपवर्गनाम्नीं  मध्यामवस्थां परविश्वयोः सः।
गत्वाऽन्तरालाख्यविमुक्तियुक्तोऽप्यत्यन्तमुक्तिं  न तथाऽपि याति॥
३५.तत्र त्रिशङ्कुस्त्रिदशालयस्थो  द्वैतत्ववान् आत्मजगद्द्वयान्तः।
आत्यन्तिकीं याति परात्परैक्यज्ञानोदयानन्तरमेव मुक्तिम्॥
३६.एवं विचारे सति संशयानामब्जोपमानां हिमपातकल्पे।
जीवात्मनोरार्यसदःसु दार्ढ्यं नानात्वमेकत्वमुभेऽपि यातः॥
३७.वाणीर्बुधेन्दास्यविनिःसृतास्ताः श्रुत्वा  न कोऽपि  प्रतिवक्तुमैच्छत्।
मूकीभवन् सभ्यगणस्तदानीं  प्रत्यैक्षतास्यानि परस्परेण॥
३९.गोष्ठी गिरा सा विकला यदाऽभूदूर्म्या तदानीं सरसीव हीना।
अह्नाय सद्धीशिवगुर्वभीक्ष्णस्तोत्रैर्बभौ भर्तृबुधः प्रमोदी॥
४०.मीमांसकानां समितौ विनीतिव्याजेन संस्थाप्य मतं स्वकीयम्।
आपृच्छ्य सर्वं  विबुधार्यवृन्दं भर्तृप्रपञ्चः स्वपुरं निवृत्तः॥
४१.एक-द्वि-ता-पण्डितमोदधीरा विद्वद्वरास्तुष्टुवुरोष्ठयुग्मात्।
निःसारितास्ताः शिवगुर्वमोघव्याहारधाराः स्तवनप्रकाराः॥
४२.शिवगुरुररसास्योऽन्तर्मुदं  गुप्तवेणीम्
इरिण इव न धत्ते किं स्विदित्यास्यहास्यैः।
तमथ  नुतिसहस्रोत्पादधातारमग्रे
सुकृतिभिरुदितानि प्रेक्ष्य नेत्रोत्पलानि॥
४३.श्रुत्वा वादं भर्तृविश्वस्य जातं
हास्यं , किन्तु ब्रह्मबोधः कथं स्यात्।
इत्थं चिन्तावल्लरी बुद्धिभूमौ
यत् प्रारोहत् तत्तु तद्वाक्यतोयात्॥
४४.इति बुधवरैरात्मज्ञाने मिथः क्रतुमत्पथि
प्रथितगतिभिस्तैर्निर्णीतिप्रसंगकृतं  वचः।
द्रुतमजनयद् भव्यं स्वप्नोदयक्षममद्भुतं
शिवगुरुमनस्यार्द्रं भावं कथञ्चन कञ्चन॥

**इति ब्रह्मकाव्ये द्वितीयः सर्गः**